यानुभावकं पङ्कजमित्यादितः पङ्कजनिकर्तृ पद्ममित्यनुभवस्य सर्व्व-सिद्धत्वात् । इयांस्तु विशेषो यद्रूढमपि मण्डपरथकारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेरयोग्यत्वेनान्वयाबोधात् । योग रूढन्तु पङ्कजादिपदमवयवशक्त्या रूढ्यर्थमेव समुदायशक्त्या चावयव लभ्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्तिवैचित्र्यात्तथैव साकाङ्क्षत्वात् । अतएव पङ्कजं कुमुदमित्यत्र पङ्कजनिकर्तृत्वेन भूमौ पङ्कजमुत्पन्न मित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इतिप्राचिकम् । ननु पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयस्याबोधात् बोधाच्च पङ्कजपुष्पमित्यादौ निर्विभक्तिकेन पङ्कजादिपदेनोपस्था-प्यार्थस्यान्वयधीसामान्यं प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्य त्वं तन्त्रम् एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनुरोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति स्वसमानविभ-क्तिकपदोपस्थाप्यत्वञ्च अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदान्त-रानुपस्थापिते पद्मादावन्वय इति चेदपङ्कजशक्तिः सप्तेत्यादौ स्वस-दृशसंशोभि तडागमुखपङ्कजमित्यादौ च व्यभिचारादुक्तव्युत्पत्तेः सङ्कोचेनेति गृहाण । नच धेनुपदस्य धानकर्म्मत्वविशिष्टायां गवीव पङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टपद्मादौ रूढिरेवास्तु नतु योगरूढिरिति साम्प्रतं अन्यत्र कॢप्तशक्तिकेभ्यः पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कजनिकर्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य गुरोः समुदायशक्यत्वादनन्यलभ्यस्यैव शब्दार्थत्वात् । यद्यपि कर्तृवाचकडप्रत्यये एव पद्मत्वविशिष्टस्य लक्षणया लाभसम्भवान्न पङ्कजभागस्य तत्र शक्तिकल्पना प्रकारान्तरालभ्यस्यैव शब्दशक्यत्व-मित्युक्तत्वात् इतिवर्त्तमानत्वयोरिवैकपदार्थयोरपि कर्तृपद्मयोर्मिथो

ऽन्वयस्य सम्भवित्वात् तथाप्यवयवानां शक्तेरग्रहे ग्रहेऽपि वा पद्मादौ तदर्थस्यान्वयधीविरोधिधीदशायां पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थमवश्यम्पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढ़िरपेया इतरथा प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया डप्रत्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहान्वयानुपपत्तेः । अतएव पङ्कजादिपदागृहीतशक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो ज्ञातेऽपि कर्त्तास्तीत्याकारकोनान्वयबोधः प्रत्ययमात्रोपस्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते । किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां कखादिप्रत्येकवर्णानामेव निरूढ़लक्षणया तत्तदर्थानुभावकत्वसम्भवाद्ककनखादिसमुदायस्यापि तत्तदर्थे शक्तिर्व्विलीयेत कादिप्रत्येकवर्णस्य शक्तिग्रहं विनापि वकादिशब्दाद्वकादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं डादिप्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्कजादिसमुदायात् पद्मादेरनुभवस्य सर्व्वसिद्धत्वात् । नचैवं चित्रगुरित्यादावपि चित्रगोस्वाम्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्याविशिष्टत्वादिति वाच्यम् अगृहीतावयववृत्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां वृत्तेरवश्यापेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति ।

पङ्कजादिपदेभ्यः केवलस्यैव योगार्थस्य रूढ्यर्थस्य वा बोधस्तदा सार्थन्तादृशार्थयोर्मिथः साकाङ्क्षत्वनियमोन कल्प्यते परन्तु रूढ्यर्थभिन्ने योगार्थस्य बोधं प्रति रूढ़िधियः प्रतिबन्धकत्वं तेन रूढेरप्रतिसन्धानदशायामवयवशक्त्यैव पङ्कजं कुमुदमित्यादौ पङ्कजनिकर्त्तृत्वादिना कैरवादेरवगमस्तथावयवशक्तेरनुपस्थितौ समुदायशक्त्यैव भूमौ पङ्कजमुत्पन्नमित्यादौ पद्मत्वप्रकारेण स्थलपद्मादेरतएव च तैलपदं योगेन तिलप्रभवं रूढ्या च विलक्षणद्रवद्रव्यपर्य्यवसितं बोधं बोधयद्योगरूढ़मपि तैलं पचेत्यादौ सर्षपस्य तैलमित्यादौ च

शक्तैव प्रत्येकस्य बोधकमिति मीमांसकानामभ्युपगन्तव्यमिति ।

रूढ्यर्थभिन्ने योगार्थबुद्धौ रूढेर्विरोधिताम् ।

वदन्ति केचिदेकैकबुद्धिस्तैः क्वचिदिष्यते ।

क्वचित्समुदायावयवयोरेकमात्रस्य शक्तिप्रतिसन्धानस्थले यद्यपि पद्मान्यधर्म्मिकपङ्कजातत्वान्वयधीसामान्यं प्रति पङ्कजपदं पद्मशक्त मित्येवं रूढिज्ञानत्वेन न विरोधित्वं तादृशधीसत्त्वेऽपि कर्दमजादि शब्देभ्यस्ताद्रूप्येण कैरवादेरवगमात् नापि पङ्कजपदजन्यतादृशबोधं प्रत्येव तथा विरोधित्वं रूढिज्ञानदशायामपि समुदायस्य लक्षणया शक्तिभ्रमेण वा पङ्कजपदात् पङ्कजातत्वेन कुमुदबोधस्य सर्व्वैरवगमात् तथाप्यवयवशक्त्या पङ्कजपदजन्यपद्मान्यधर्म्मिकपङ्कजातत्वान्वयबोधं प्रत्येव रूढिज्ञानत्वेन प्रतिबन्धकत्वम् । नच कुमुदएव पद्मत्वेन रूढि भ्रमदशायां ताद्रूप्येण कुमुदस्य बोधानस्यात्(?)विरोधिन्या रूढिधियः सत्त्वादितिवाच्यं पद्मान्यधर्म्मिकेत्यनेन पद्मत्वानवच्छिन्नविशेष्यताकत्व-स्योक्तत्वात् । पद्मस्येव कुमुदस्यापि समुदायशक्यत्वधीदशायामव-यवशक्त्या पङ्कजातं कुमुदमित्याकारकधीस्वीकारे तु कुमुदादिशक्तत्व ज्ञानाजन्यत्वेनापि प्रतिबध्यं विशेषणीयम् । नच यत्र तात्पर्य्यादि धीविलम्बादयोग्यताभ्रमादिना प्रतिबन्धाद्वा रूढ्यनुपस्थिते पद्मे योगा-र्थस्य पङ्कजनिकर्त्तुरन्वयस्तत्रावयवशक्त्या पङ्कजातत्वेन कुमुदादि बोधोन स्यात् विरोधिनो रूढिज्ञानस्य सत्त्वादितिवाच्यं मीमांसका नामिष्टत्वात् ते हि मण्डपं भोजयेत्यादावपि गृहादौ रूढिधीसत्त्वे मण्डपादिपदानामवयवशक्त्या मण्डपानकर्त्रादेर्न मन्यन्ते बोधं भ्रमत्व प्रकाराकन्दितस्यैव रूढ्यर्थगोचरतद्योग्यताज्ञानाद्यभावविशिष्ट स्यैव रूढिज्ञानस्य विरोधितायाः सुवचत्वाच्च । यदि च समुदाय एव पद्मत्वेन पङ्कजनिकर्त्तृत्वेन च शक्तः प्रमाभ्रमाभ्यां पङ्कजातं पद्म मित्याकारकोबोधः प्रामाणिकस्तदानीं च पङ्कजनिकर्त्तृत्वेन कुमुदस्य

नान्वयधीः तदवयवशक्तेरव्ययत्वाय पङ्कजपदघटकावान्तरशक्तेरिति प्रति-
बन्धकत्वे निक्षेपणीयं तद्घटकत्वञ्च तद्विषयिताव्यापकविषयिताकत्व
मात्रं तदवयवद्वय तथाप्यविशिष्टम्। यत्तु स्वावयवशक्त्या पङ्कजपद
जन्यं पङ्कजनिकर्तृत्वेनान्वयबोधं प्रति पद्मत्वं हेतुस्तत्र कार्य्यस्य
विशेष्यत्वं तदवच्छेदकत्वं वा कारणस्य तु समवायतादात्म्यं वा
प्रत्यासत्तिरित्येतावतैव योगार्थमर्य्यादया कुमुदादेर्बोधानुदयसम्भ-
वात् उक्तकार्य्यस्य प्रतिबन्धकतायां मानाभावः पद्मत्वं पङ्कजप्रयोगो-
पाधिरिति प्राचीनप्रवादस्याप्युक्तार्थ एव पर्य्यवसानादिति तत्तुच्छं पद्मा
गृहीतशक्तिकस्यापि पुंसः पङ्कजनिकर्तृत्वेनावयवशक्त्या कुमुदस्य
बोधानुदयप्रसङ्गात् नचेष्टापत्तिरनुभवविरोधात् नच रूढ़िज्ञान
कालीनमेव योगार्थस्य बोधं प्रत्युक्तरीत्या पद्मत्वस्य हेतुत्वं तथासति
रूढ़िधीदशायामपि तदसमानकालीनस्य पङ्कजातत्वेन कुमुदबोधस्य
सामान्यसामग्रीमहिम्ना दुर्व्वारत्वापत्तेः रूढ़िज्ञानासमानकालीन
तादृशबोधं प्रति विशेषतो हेत्वन्तरस्याकॢप्तत्वात् तत्कल्पने चातिगौर-
वात्। यदपि पङ्कजननकर्तृषु पद्मादिपदार्थानां शक्तिसत्त्वेपि पङ्कज
पदान्न तादृप्येण बोधः परन्तु पद्मत्वमात्रेण योगार्थमर्य्यादया पङ्क
जातत्वप्रकारकबोधसामान्यं प्रत्येव पद्मत्वविशिष्टे रूढ़िज्ञानस्य लाघ-
वेन विरोधित्वात् पद्मान्यधर्म्मिकबोधे तु गौरवेण प्रतिबध्यकोट्यप्रविष्ट-
त्वादतो योगरूढ़ं नामैव नास्ति युधिष्ठिरादिशब्दादपि रथस्थिरत्वादिकं
योगार्थं परित्यज्यैव वैजात्यादिप्रकारेण कुन्तीपुत्राद्यवगमात्।
यदुक्तमभियुक्तैः या वृत्तिरजहत्स्वार्था सेयमत्रोपपादिता। जहत्-
स्वार्था तु तत्रैव यत्र रूढ़िर्व्विरोधिनी। पङ्कजं मनसारेजे
पद्मनाभो युधिष्ठिर इति। तदेतद्वैयाकरणमतं पङ्कजमस्तीत्यादितः
पङ्कजातं पद्ममस्तीत्यार्थानुभवस्य न्यायमीमांसादिसकलतन्त्रसिद्धत्वेन
गौरवस्य प्रामाणिकत्वादनादेयमन्यथा अवयवशक्तेरपि प्रतिबध्यताया

नप्रबोधकत्वेऽप्यनेन पङ्कजत्वप्रकारकशाब्दसामान्यं प्रत्येव रूढि-ज्ञियः प्रतिबन्धकत्वस्य सुवचत्वात्। नन्वेवं पङ्के सरसिजमस्ती-त्यादितोऽन्वयमिष्टं सरोजमिव यथाभिन्ने सरसि जातं पद्ममपि प्रती-येत नामार्थयोरभेदान्वये तत्त्वस्य नाम्नोः समानविभक्तिकत्वस्यान-पायादिति चेत् सत्यं सविभक्तिकनामार्थस्य नामान्तरार्थान्वये क्वचि-च्छब्दैकदेशान्वयेनैव समानविभक्तिकनामान्तरेण कारितत्वस्य तत्र-मायाः स्वीकार्य्यत्वादिति।

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वितः स्वार्थः पदैः समधिगम्यत इति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोराका-ङ्क्षादिसाचिव्यादाख्यान्वयबुद्धिस्वरस्य योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयोऽनतु तयोरेव मिथःसाकाङ्क्षत्वं अन्यत्र योगार्थस्य बोधने रूढिधियः प्रतिबन्धकत्वं वा प्रमाणाभावात् एवञ्च यत्र योगरूढि-लभ्यार्थयोस्तात्पर्य्यग्राहकादिरोधिसमवधानाद्वा न रूढ्यर्थमन्वयधी-स्तत्र योगार्थमर्य्यादया पङ्कजत्वेन कुमुदादेः समुदायशक्त्या च पद्मत्वेन कमलस्य बोधो भवत्येवेति मणिकृन्मतं दर्शयति।

रूढ्यर्थेऽन्यत्र वा यत्र यदाकाङ्क्षादिनिश्चयः।
तदेव तत्र योगार्थस्यान्वयो मणिकृन्मतः।

समुदायशक्त्युपस्थापिते पदान्तरवृत्त्युपस्थापिते वा यत्र धर्म्मिण्य-वान्तरवृत्तिलभ्यार्थस्य यदाकाङ्क्षानिश्चयादिकं तदैव तत्र तस्यान्वय-बोधजननसमर्थसामग्रीकत्वात् रूढ्यर्थभिन्ने योगार्थस्यान्वयबोधा-नुदयाय तु रूढ्या योगापहारितावादो रूढ्यर्थमात्रे योगार्थस्यान्वय-बोधसामग्रीसत्त्वाभिप्रायक इति चिन्तामणिकृतां मतम्।

योगरूढं विभजते।

सामासिकं तद्धितान्तमिति तद् द्विविधं भवेत्।
योगरूढं अलुगन्तस्य समासत्वव्यवस्थितेः।

तत् योगरूढं सामासिकं समासाघटकं शब्दसर्पादि तद्भिन्नन्तु वासुदेवादि। कृदन्तस्य पङ्कजादियोगरूढस्य सामासिकत्वाभावादिति नाधिक्यम्।

यौगिकं नाम लक्षयति विभजते च।

योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम्।
समासस्तद्धितान्तञ्च कृदन्तञ्चेति तत्त्रिधा।

यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम्। योगरूढन्तु शब्दसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं नतु तन्मात्रस्य। तच्च यौगिकं त्रिविधं समासस्तद्धितान्तं कृदन्तञ्चेति द्वन्द्वोऽपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयबोधकतया यौगिक एव। सर्व्वञ्चेदं रूढान्यत्वेन विशेषणीयं नातः शब्दसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः। आश्वी श्वश्रूः सुभ्रूरित्यादौ ङीबादेः स्त्रीत्वबोधकत्वे तादृशं नाम यौगिकमेव अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढमेव नातो विभागस्य व्याघातः।

यौगिकेषु समासं लक्षयति।

यादृशस्य महावाक्यस्यान्तर्वाक्यादिर्निजार्थके।
यादृशार्थस्य धीहेतुः स समासस्तदर्थकः।

यादृशमहावाक्योत्तरवाक्यादिः स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुस्तादृशं तदात्मकं तथाविधार्थे समासः। पाचकादिकन्तु पाककर्त्राद्यर्थकं वाक्यमपि स्वघटकानेकनामकत्वाभावात्तादृशार्थकत्वविरहान्न महावाक्यं प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वा प्रकृतेर्वाक्यस्य महत्त्वं वाच्यं तेन उपकुम्भादौ नाव्ययीभावे नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः।

क्षीरकर्दमीत्यादिकन्तु प्रकृत्यर्थावच्छिन्नतदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्रावच्छिन्नस्य ततः पानशीलसामान्यस्याप्रत्ययात् राज्ञः पुरुषत्वमित्यादितो राजन्येव पुरुषभावः प्रतीयते न तु राजपुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो राजपुरुषत्वेत्यादिसमासे न प्रसङ्गः। पायं पायमित्यादिकृदन्तभागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधको न तु त्वादिप्रत्ययार्थस्य प्रकृत्येत्यादौ समासस्थपदेष्वास्थयादिशब्दसंस्कारप्रयोजनको ज्ञेयः।

विभजते।

सचायं षड्विधः कर्मधारयादिप्रभेदतः।
यश्चोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः।

सचायं निरुक्तसमासः कर्मधारयद्विगुतत्पुरुषाव्ययीभाव बहुव्रीहिद्वन्द्वभेदात् षड्विधः यश्च कुम्भकारादिरुपपदसंज्ञकः समासोऽस्ति तेन सह समासः सप्तविधः। सङ्ग्रामनिर्भीकाद्या-दीनामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्य बोधकतया तथाविधनामान्तत्वमेव चैतस्य समासान्तराद्विशेषः।

ननु यदि षड्विधः सप्तविधो वा समासस्तदा कथं पञ्चविधत्वोक्तिः प्राचामसङ्गतेत्यतस्तामुपपादयति।

पूर्वमध्यान्तसर्वान्यपदप्राधान्यतः पुनः।
प्राच्यैः पञ्चविधः प्रोक्तः समासो वाभटादिभिः।

कश्चित्समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधानउच्यते यथा प्राप्तजायार्द्धपिप्पलीपूर्वकायादिकस्तत्पुरुषः यथा वा उपकुम्भाद्यव्ययीभावः पुरुषसिंहादि कर्मधारयश्च। कश्चिन्मध्यपदार्थधर्मिकधीजनकतयैव मध्यपदप्रधानो यथा घटानधिकरणप्रतियोगितावच्छेदकेत्यादिकस्तत्पुरुषः घटस्य नाधिकरणमित्यादि

विग्रहे अन्यपदार्थस्यैव विशेष्यत्वात् बहुपदे बहुव्रीहिरित्येतस्य तत्पुरुषादेर्बहुनामगर्भत्वाभावे तात्पर्य्यमित्यग्रे वक्ष्यमाणत्वात्। कश्चिदन्यपदार्थधर्म्मिकधीहेतुत्वादन्यपदप्रधानः यथा राजपुरुषादिकस्तत्पुरुषो नीलोत्पलादिकः कर्म्मधारयो द्विगावप्यव्ययीभावश्च। कश्चित्सर्व्वपदार्थधर्म्मिकबुद्धिहेतुत्वात् सर्व्वपदप्रधानः यथेतरेतरद्वन्द्वो द्वन्द्वमात्रं वा। कश्चित्तद्घटकान्यपदार्थधर्म्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः यथा बहुव्रीहिः स्वल्पयवाव्ययीभावश्च। तदेवं पञ्च भेदानादायैव पञ्चविधत्वं प्राचीनसम्मतेन विरोधः। नित्यानित्यभेदेन समासस्य द्वैविध्यमप्यस्ति यदुक्तं जयादित्येन विभक्तिमात्रप्रक्षेपाभिज्ञान्तर्गतनामसु। स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासिकाविति। स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यार्थस्याबोधः स नित्यः समासः यथा कृष्णसर्पनिर्मक्षिकासुरादिः कृष्णः सर्पो मक्षिकाणां निः न सुर इत्यादितल्लभ्यस्य वैजात्यादेरप्रत्ययात् यल्लभ्यस्य च बोधः सोऽनित्यः यथा राजपुरुषपूर्व्वकायादिः तल्लभ्यार्थस्य राज्ञः पुरुषः पूर्व्वं कायस्येत्यादिवाक्यादपि प्रतीतेः। स्फुरद्वाग्मी चलच्चैत्र इत्यादिकः कर्म्मधारयोऽप्यनित्य एव समासः स्फुरन्ती वाग्मीत्यादिविग्रहस्य वाक्यादौ स्फुरदादिविधेयकबोधजनकत्वेऽपि स्फुरदभिन्नवाग्म्यादावेकत्वादिबोधकत्वमादायैव तदर्थप्रकाशकत्वात् स्फुरन्तीं वाग्मीमित्यादिवाक्यस्यैव तत्र विग्रहत्वसम्भवाच्च विग्रह एव समासलभ्यार्थस्य बोधकत्वं तत्त्वं न तु समासे विग्रहार्थस्य विग्रहलभ्ययोर्लिङ्गसंख्ययोर्यथाक्रमं वैधर्म्येण प्रायशः समासाबोध्यत्वात्। अतएव यत्र समासे तयोर्व्यक्तसङ्ख्यावत्त्वावगमोऽपि यथा जरतीचित्रगुर्व्वोः प्रियतिसृका पुरुष इत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययतिस्रादेशयोस्तदभिव्यञ्जकयोः सत्त्वात् यथावां वामुपरि युवामुपरि प्रियद्वयुवा इत्यत्र भिन्नाद्वावेकत्वादेः आवयोर्युवयोरेतदव्ययीभावस्य युष्मदस्मदो-

द्वित्वस्य युवाद्यादेश्वस्य सेनाङ्गानां बहुत्वस्य समाहारद्वन्द्वस्य विधानात्। तदुक्तमभियुक्तैः संख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत्। यत्र तु व्यञ्जकं किञ्चित्तत्र संख्या प्रकाशते शलाकापरि द्वयस्य पूर्व्वकायोऽर्द्धपिप्पलीति। पूर्व्वादेरर्द्धस्य च कुमर्थैकत्वमन्तर्भाव्यैवावयविना तत्पुरुषस्य व्युत्पन्नत्वात्, सरसिजादौ कण्ठेकालादौ चालुक् समासे सुपः संख्यावगमेऽपि न क्षतिः तत्र व्यञ्जकसुपः सत्त्वेऽपि संख्या न बुध्यतइति तु समासशक्तिवादिनः पातञ्जलाः।

समासेषु कर्म्मधारयं लक्षयति।

क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम्।
तादात्म्येन भवेदेष समासः कर्म्मधारयः।

क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्म्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशनामद्वयं कर्म्मधारयः नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः तथा पुरुषसिंहइत्यादावपि पुरुषादावुत्तरपदलक्ष्यस्य सिंहादिसदृशस्य पुरुषः सिंह इवेत्यादिविग्रहे प्रायेणोपमेयस्योपमानेरिति कर्म्मधारयानुशासनात्। कुम्भस्य समीपमित्याद्यर्थक उपकुम्भादिर्न तादात्म्येनान्वयबोधकः प्रवलमपक्रष्यमित्यादेः संग्रहाय नामपदस्य धातुभिन्नोपलक्षकत्वात् सार्थकसामान्यपरत्वेऽपि दृष्टभावाच्च। नीलमुत्पलमित्यादौ तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं बोधयदपि न क्रमिकं विभक्त्या व्यवधानात्। यदि च तादात्म्येन नीलादिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तरनामोपस्थाप्यत्वं तन्त्रमतोन तत्राभेदसम्बन्धेन नीलादेरन्वयः इत्थञ्च विशेषणविभक्त्युपस्थापिते तादात्म्यएवाधेयत्वेन नीलघटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येवंद्वन्द्वात्मकनाम्नैवोपस्थापिते पटे नीलस्य तादात्म्येनान्वयान्न व्यभिचारः स्तोकं पचति धान्येन धनं

पचत्वा मृदुरित्यादावपि स्तोकादेर्न धात्वाद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्यस्याधेयत्वेनेत्यादिकं विभाव्यते तदा कर्मिकत्वमनुपादेयमेव । राजपुरुषइत्यादिकस्तु तत्पुरुषोन पुरुषे पूर्व्वपदलक्षितराजसम्बन्धिनस्तादात्म्येनान्वयबोधकः समासविग्रहयोस्तुल्यार्थकत्वव्याप्त्यापत्तेः परन्तु राजसम्बन्धस्यैव अतएव राजपुरुषइत्यादौ पूर्व्वपदे षष्ठ्यर्थसम्बन्धे लक्षणेति मणिकृदुक्तमपि सङ्गच्छते । यथाच नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते । किञ्चिद्विशिष्टसुबर्थानवच्छिन्नस्यैव वा तादात्म्येनान्वय बोधकत्वमुक्तनिरुक्तौ निवेश्यम् । एवमपि पञ्चपुत्र्यादिर्द्विगौ द्विगार्ग्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्नगार्ग्यादिबोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात् । अत्र च मानुषब्राह्मणो ब्राह्मणमानुषइत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्य व्यभिचारस्तत्रैव कर्म्मधारयः साधुः प्रमेयधूमइत्यादौ तु नरस्य शरीरं राहोः शिर इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुषएवेति वृद्धाः । चन्दनतरुविन्ध्यगिरिवसन्तसमयइत्यादिप्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणाव्यभिचारित्वं कर्म्मधारये तन्त्रं नतु विशेषणस्यापि तद्व्यभिचारित्वं पुरुषोत्तमइत्यत्र चोत्तमत्वं न किञ्च श्यामादिमत्त्वं किन्तु भ्रमविधुरत्वम् अतएव तत्र पुरुषस्येव पुरुषेऽपि तस्य व्यभिचारसत्त्वादुत्तमपुरुषइत्यपि कर्म्मधारयः साधुरिति तु नव्याः । तदाद्युत्तरपदकः कर्म्मधारयः प्रायशो नेष्यते नीलतद्धीत्यादितात्वपि नीलोत्पलादेरक्तत्वाद्यप्रतीतेः । पक्वयज्ञाजन्नं रम्यमामतद्भक्तनं वृथा । नीलयदस्याख्याद्यः कटुतद्रूपमीप्सते इत्यादिप्रयोगात् क्वचिदिष्यतेऽपि प्रयुक्तश्च अमरनन्दिना परमः स इत्याद्यर्थे परमसः परमतीवित्यादि । तत्पुरुषोऽप्येतेन व्याख्यातः । ननु विशेष्यतया नामार्थप्रकारकान्वयबुद्धिमात्रं प्रत्येव नामोत्तर

विभक्त्युपस्थाप्यत्वं तत्त्वं ननु तादात्म्यसम्बन्धावच्छिन्नतत्प्रकारक-
शाब्दबुद्धिं प्रति गौरवादनो नामार्थयोर्नीलोत्पलयोरन्वयासम्भवात्
कर्म्मधारयादिकः समासो न यौगिकः किन्तु नीलोत्पलत्वादिविशिष्टे
रूढ एव। तदुक्तं भर्त्तृहरिणा अबुधान् प्रत्युपायाश्च विचित्राः
प्रतिपत्तये। शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोरिति वैयाकरणाः
वस्तुतः नीलोत्पलमित्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीलादि
प्रत्येकपदोपस्थितयोस्तयोस्तादात्म्येनान्वयबोधस्यानुभविकत्वेन मैव-
वस्य प्रामाणिकत्वादन्यथा नामार्थस्यान्वयबोधसामान्यं प्रत्येव नामो-
त्तरनामोपस्थाप्यत्वं तदुररीकृत्य नीलमानयेत्यादौ नामार्थसुबर्थयो
र्नान्वयबोधः परन्तु सुबन्तभागस्य नीलविशिष्टकर्म्मत्वादौ रूढिरेवे-
त्यपि विज्ञ रोचये। नच समासस्याशक्तत्वे नीलो द्रव्यञ्च घट
इत्यादाविव नीलघटो द्रव्यमित्यादावपि घटे धर्म्मिण्येकत्र द्वयमिति
न्यायेन नीलद्रव्ययोस्तादात्म्येनान्वयापत्तिरिति वाच्यं नामार्थस्य
मुख्यविशेष्यताक इव तादात्म्यावच्छिन्नविधेयताकेऽपि बोधे नाम्नः
प्रथमान्तत्वस्य तन्त्रत्वात् विधेयत्वन्तु विषयतावच्छेदकतान्यप्रकारत्वं
प्रकारताप्रभेदो वेत्यन्यदेतत् पटमित्यादौ तु कर्म्मत्वादौ घटादिर्न तादा
त्म्येन विधेय इति न तत्र व्यभिचारः। ननु नीलं पीतञ्चोत्पलं यत्र
इत्यर्थे नीलपीतोत्पलं सर इत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पल
मित्यर्थे नीलपीतोत्पलं पुष्पमित्यादिकः कर्म्मधारयोऽप्येकत्र द्वयमिति
न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठधर्म्मिताकधीजनकः कथं न
स्यात् इति चेन्न बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास इत्यनु-
शिष्टिबलेन बहुव्रीहेरेव स्वनिविष्टनामद्वयोपस्थाप्यार्थद्वयावच्छिन्न
तादृशनामान्तरार्थनिष्ठविषयताकबोधं प्रति हेतुत्वेन समासान्तरस्य
तादृशधियं प्रत्यसमर्थत्वात्। नीलपीतोत्पले इमे पीतनीलोत्पलका-
मिनीमित्यादौ तु नीलोत्पलं पीतोत्पलञ्च इदमित्याकारकस्यैव बोधो

ननु नीलं पीतञ्च यदुत्पलं तन्नस्यमित्याकारः । अतएव द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धसूचनार्थं नीलपीते च ते उत्पले चेत्यादिकमेव तत्र विग्रहं वर्णयन्ति ननु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम् । घटस्य नाधिकरणमित्यादिविग्रहे घटानधिकरणमित्यादिकन्तु मध्यपदप्रधानस्तत्पुरुषेण बहुनामगर्भो नवैकशब्दयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः ।

स्यादेतत् समासानां समुदायशक्तत्वे वाचस्पतिर्मितायाः स श्यामे कण्ठे श्यामः पुमान् इत्यादौ वाचि मितायाः कण्ठे च श्यामादेर्नाभेदेनान्वयो वा गादेः पदार्थैकदेशत्वेन तत्र पदान्तरार्थस्य पशुरयमुगगयां समवेतमित्यादाविव निराकाङ्क्षत्वादेवं पत्न्या द्विजातिस्वाध्यायो जटाभिस्तापसस्पृहेत्यादौ पत्नीसद्भावस्य द्विजातौ जटावैशिष्ट्यस्य च तापसे भेदेनापि नान्वयो यथाकाशमभिघातादित्यादौ । यौगिकत्वे तु तत्र तत्र तथाविधान्वयो दुर्व्वारो वाक्प्रभृतेः पदार्थत्वादिति चेन्न वृत्त्येकदेशपदस्यार्थ सम्बन्धस्य कारकस्य वा बोधकान्यविभक्त्यर्थानुभावकतायां निराकाङ्क्षत्वादेव तस्य निरस्तत्वादतएव चैत्रस्य गुरुकुलं शरैः शातितपत्रक इत्यादौ गुर्व्वादिपदस्य वृत्त्येकदेशत्वेऽपि तदर्थे षष्ठ्यर्थसम्बन्धस्य तृतीयार्थकरणत्वादेश्चान्वयः सर्व्वसिद्धः । समासस्येव क्यजादिप्रत्ययान्तस्यापि वृत्तित्वात् परिष्कृतायाः सततं यस्तु वाचस्पतीयते । सम्पदा जटया वापि पुत्रीयति स पृच्छ इत्यादेरपि वागाद्यंशे परिष्कृतादेः पुत्राद्यंशे च सम्पदादेः सह-भावादिबोधकतायां न सामर्थ्यमतएव प्रतियोगिपदादन्यस्माद्यत् कारकादपि । वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यत इत्यपि पठन्ति । कर्म्मधारयलोमोत्थं कुरु पापक्षयं ममेत्यत्र च योगोत्थमित्यस्य योगप्रयोज्यमित्यर्थः स चाभेदेन पापक्षयेऽन्वितः । यस्मिन् दाक्षिणते

सूर्य्ये विपत्तिं यान्ति मानवाः । तेषान्तथैव कर्त्तव्या पिण्डदानादिका क्रियेति वचनस्य स्वमूलं समूलत्वे तु यस्मिन् राशौ गते सूर्य्ये इत्येव तत्र पाठ इत्यास्तां विस्तरः ।

द्विगुं लक्षयति ।

संख्यापूर्व्वयुतं नाम तदलक्ष्यार्थबोधकम् ।
अभेदेनैव यत्स्वार्थे स द्विगुस्त्रिविधो मतः ।

संख्यावच्छिन्नशक्तयत्पदोत्तरत्वविशिष्टं यन्नाम स्वार्थधर्म्मिकं तादात्म्येन तदलक्ष्यार्थस्यान्वयबोधं प्रति समर्थं तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्नस्वार्थे द्विगुरुच्यते । त्रिकटु त्रिभुवन चतुर्युग चतुर्व्वर्ग पञ्चगव्य पञ्चामृत षड्रस षट्पदार्थ सप्तर्षि अष्टनाग अष्टवसु नवरस नवग्रह दशमूल एकादशरुद्र एकादशेन्द्रिय द्वादशादित्यादिकस्तु कर्म्मधारयः षष्ठ्यादिपर्य्याप्तित्वावच्छिन्नबोधकतया न पूर्व्वपदालक्ष्यार्थस्य बोधकस्त्रिकटुप्रभृतिभ्यः कटुत्वादिसामान्यस्याप्रतीतेः पञ्चमूलीत्यादौ तु मूलपञ्चकत्वेनैव मूलविशेषेषु तात्पर्य्यं न तु विशेषरूपेणापि अतएव कराटकार्य्यादिकं लक्ष्यं गाम्भार्य्यादि च यन्महत् । पञ्चमूलं तदुभयं दशमूलमुदाहृतमित्यादिकस्ताद्रूप्येण बोधस्थलीयः प्रयोगः वर्षाकाले मघच्छेद्या युक्ता चापि त्रयोदशीत्यादिवदेकवचनस्य साधुत्वसम्भवात् द्वयोस्त्रयमित्याद्यर्थे द्वित्र्यादिपदं नाभेदेन द्विप्रभृतेरनुभावकम् एकत्वसंख्यया विशिष्टं बोधयदपि एकपदं न पर्य्याप्तिसंसर्गेण तदवच्छिन्नस्य बोधकं द्वित्वादिपदं पर्य्याप्त्या द्वित्वावच्छिन्नं प्रतिपादयदपि न तत्र शक्तं वाच्यत्वादतोनैकघटद्वितयपटेत्यादिकर्म्मधारयेऽतिप्रसङ्गः । सप्तशती पठ्यतामित्यादौ च यद्यपि शते धर्म्मिणि सप्तानामभेदेन नान्वयो बाधितत्वात्तथापि सप्तपदस्थितस्य सप्तगुणितस्य द्विगुत्वहान्यापत्तेः तथापि शतपदार्थैकदेशे शतत्वसंख्यायां तस्याः सप्तत्वसम्भवादिति वदन्ति । द्विगार्थं

मध्यत इत्याद्यव्ययीभावप्रकारस्तु पूर्ववत् । तथायं द्विगुस्त्रिविधः तद्धितार्थोत्तरपदसमाहारभेदात् ।

तत्र तद्धितार्थं द्विगुं लक्षयति ।

तद्धितार्थान्वितस्वार्थस्तद्धितार्थद्विगुर्मतः ।
तद्धितार्थे लाक्षणिकसंख्यानामा त्वसर्व्वगः ।

यो द्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः स तद्धितार्थद्विगुः । द्विमुद्र इत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य द्विवर्षा गौरित्यादौ द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य द्विदलं पवित्रमित्यादौ द्वाभ्यां दलाभ्यां निर्म्मितस्य द्विगुञ्जं स्वर्णमित्यादौ द्वाभ्यां गुञ्जाभ्यां तुलितस्य त्रिकाण्डः पुरुष इत्यादौ त्रिभिः काण्डैः परिमितस्य पञ्चकपालश्चरुरित्यादौ पञ्चभिः कपालैः संस्कृतस्य बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात् परिच्छिन्नतामतेनेदम् । उक्तप्रयोगेषु द्विगोरन्तिमनाम्नैव क्रीतादिरूपार्थो लक्ष्यते न तु लुप्तठगादिरप्यपेक्ष्यतेऽतस्तद्धितार्थलाक्षणिकसंख्यानामको द्विगुरेव तद्धितार्थद्विगुरिति भक्तिभाज्यमतन्तु न युक्तम् असर्व्वगत्वात् पाञ्चपुरुषिरित्यादौ पञ्चानां पुरुषाणामपत्यस्य पञ्चगार्ग्यरूप्यो गौरित्यादौ पञ्चानां गार्गाणां भूतपूर्व्वस्य बोधने तद्धितेनैव स्वार्थस्यापत्यप्रभृतेरुपस्थापनात् द्विस्वर्णमुद्रः पशुरित्यादावुत्तरपदस्य शक्तिविरहेण क्रीताद्यर्थलाक्षणिकत्वायोगाच्च ।

उत्तरपदद्विगुं लक्षयति ।

स्वान्तर्निविष्टशब्दाभ्यां शब्दान्तरसमासगः ।
यो द्विगुः शाब्दिकैरुक्तः स उत्तरपदद्विगुः ।

यो द्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामान्तरेण समासस्यान्तर्गतः स उत्तरपदद्विगुः यथा पञ्च गावो धनमस्येत्यादिविग्रहे पञ्चगवधनः पुरुष इत्यादौ बहुव्रीह्यादिनिविष्टः पञ्चगवादिः ।

समाहारद्विगुं लक्षयति ।

स्वार्थान्वितसमाहारलक्षकस्वान्तशब्दकः ।
उक्ताभ्यामितरः किं वा समाहारद्विगुर्द्विगुः ।

स्वोपस्थाप्यार्थस्य समाहारलक्षकोयदीयान्तशब्दः स द्विगुः
समाहारद्विगुः पञ्चपूलीत्यत्र हि योगलभ्यानां पञ्चाभिन्नपूलानां
समाहारः परस्थपूलशब्देन लक्ष्यते नतु तत्र द्विगोः शक्तिरन्यलभ्ये
शक्त्ययोगात् अतएव न लक्षणापि शक्यसम्बन्धस्यैव लक्षणात्वेन वाक्ये
तदसम्भवात् । यदि च पञ्चपूलीत्यतः पञ्चानां पूलानामेव बोधो
नतु तत्समाहारस्यापि अतएव पञ्चपूलीं छिनत्ति इत्यादिकः प्रयोगः
प्रमाणम् अन्यथा समूहात्मनः समाहारस्य छिदाद्यसम्भवेन तद-
योग्यत्वापत्तेः पूलादेर्द्वित्वबहुत्वेऽप्येकवचनन्त्वानुशासनिकं दारादे-
र्बहुवचनवदुपपद्यते । नच द्रव्यप्राधान्ये पञ्चखट्वीत्यादौ ह्रस्वो न स्यात्
गोशब्दस्येव स्त्रीप्रत्ययस्यापि समासान्त्यस्योपसर्ज्जनस्यैव तद्विधा-
नादिति वाच्यं समाहारसंज्ञकद्विगोरप्यन्त्यस्य स्त्रीप्रत्ययस्य पृथगेव
ह्रस्वविधेर्व्वक्तव्यत्वात् प्रयोगानुसारित्वात् कल्पनायाः पञ्चपात्री-
त्यादावव्याप्तिश्च तत्रोत्तरपदस्य वाच्यत्वेन लक्षकत्वायोगादिति सूक्ष्म-
मीक्ष्यते तदा पूर्व्वं निरुक्ताभ्यां तद्धितार्थोत्तरपदद्विगुभ्यां भिन्नद्विगु-
रेव समाहारद्विगुर्बोध्यः । एवञ्च द्विगोः कर्म्मधारयान्तर्गतत्वेऽपि
न क्षतिरिति तु विभावनीयम् ।

तत्पुरुषं लक्षयति ।

यदीयेन सुबर्थेन युतयद्बोधनक्षमः ।
यः समासस्तस्य तत्र स तत्पुरुष उच्यते ।

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः
समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुषः नतु यन्नामोत्तरं
यन्नाम यदर्थगतसुबर्थावच्छिन्नस्य यत्स्वार्थस्य बोधकं तदुत्तरं तन्ना-
मैव तदर्थयोस्तत्पुरुषः पूर्व्वकायोऽर्द्धपिप्पलीत्यादावव्याप्तेः । लोक

पक्वेत्यादौ क्रियाविशेषणैः कर्म्मधारयएव मन्दाकर्मिंदाविदुरेत्यादौ स्थवित्यादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्या भेदान्वयबोधकतया तथात्वसम्भवात् स्तोकं पक्वेत्यादौ अमत्वादावत्र वाचित्वे तु तत्पुरुषः सम्भवत्येव क्रियाविशेषणैः समासश्चाव्ययम इति तु न देश्यं स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः प्रयुक्त-त्वात् द्विगौ कर्म्मधारये च शाब्दिकानां तत्पुरुषत्वव्यपदेशः पद संस्कारार्थो गौणः ।

विभजते ।

द्वितीयादिसुबर्थस्य भेदादेष च षड्विधः ।
क्रियान्वयी द्वितीयादेरर्थः प्रायोऽत्र योजितः ।

ग्रामगतः चैत्रभीतः ब्राह्मणदत्तः वृक्षपतितः चैत्रधनं मैत्रगतिः गृहस्थितइत्यादौ द्वितीयादिसुबर्थस्य कर्म्मत्वकर्तृत्वादेर्भेदादे-तस्य द्वितीयातृतीयादितत्पुरुषत्वेन षड् भेदाः स्वघटकैकपदार्थनिष्ठ द्वितीयार्थावच्छिन्नापरपदार्थबोधकसमासत्वादेर्धर्मषट्कस्य सुवच-त्वात् । इयांस्तु विशेषोयदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः पीठं परितः पुण्येन सुखं ग्रामाय विद्या दण्डाद्भूटः गवां स्वामी सम्पन्नक्षीरा तिलेषु तैलमित्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् वर्ष-सुखी लोष्टकायः कुण्डलहिरण्यं घटान्यः कुबेरबलिः कर्म्मकुशल इत्यादौ तु तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः ।

ननु ग्रामगतइत्यत्र गतौ ग्रामकर्म्मत्वस्य राजपुरुषइत्यत्र च पुरुषे राजसम्बन्धस्यावगमेन ग्रामादिपदेभ्योलुप्तसुपः स्मरणात् तल्लोप-मजानतोऽप्यन्वयबोधात् सम्बद्धं ग्रामगतइत्यादितः सम्बद्धग्रामयो-रभेदान्वयधीप्रसङ्गाच्च सम्पन्नं दधि पक्वेत्यादाविव तथापि नामा-र्थयोरभेदान्वयबोधौपयिकस्य नाम्नोः समानविभक्तिप्रतिसन्धानस्या-विरहत्वात् नापि ग्रामादिपदस्य ग्रामकर्म्मत्वादिलक्षकत्वात् अभे-

दान्वयसम्भवेन नामार्थस्यान्वयबोधं प्रत्यनुकूलस्य नामोत्तरविभक्त्युप-
स्थाप्यत्वस्य तादृशप्रत्ययोपस्थाप्यत्वस्य वा गत्यादावसत्त्वात्। न च
ग्रामादिपदलक्षितस्य ग्रामकर्म्मत्वादेरेव तत्र गत्यादौ तादात्म्ये-
नान्वय इति साम्प्रदायिकानाम्मतमेव साम्प्रतं तत्पुरुषस्यापि समस्य-
मानपदार्थयोरभेदान्वयबोधकत्वे कर्म्मधारयत्वापत्तेः ग्रामं गतः राज्ञः
पुरुष इत्यादिविग्रहस्य समासतुल्यार्थकत्वहान्यापत्तेश्चेति चेन्न प्रत्य-
यान्ततत्तन्नामार्थस्यैव भेदेनान्वयबोधं प्रति तत्तन्नामोत्तरप्रत्ययोप-
स्थाप्यतायास्तन्त्रत्वेन ग्रामगत इत्यादौ ग्रामादिपदलक्षितग्रामकर्म्म-
त्वादेर्गत्यादौ भेदेनान्वये बाधकाभावात्। नचैवं गतो ग्राममित्यत्रापि
ग्रामपदलक्षितस्य ग्रामकर्म्मत्वादेर्गत्यादौ भेदेनान्वयबोधप्रसङ्गः
प्रत्ययान्तान्यतत्तन्नामोपस्थाप्यार्थस्यान्वयबोधसामान्यं प्रत्येवोत्सर्गत
स्तादृशतत्तन्नामोत्तरनामोपस्थाप्यत्वस्य हेतुत्वेन तदसम्भवात्। अत
एवार्द्धपिप्पल्यादेरित्यादौ पूर्व्वपदप्रधानत्वेनाभिमतस्य तत्पुरुषा-
देरन्यपदार्थानां पिप्पलीप्रभृतीनां खण्डाद्यर्थे घटपटमठानामि-
त्यादौ च सर्व्वपदप्रधानत्वेन द्वन्द्वस्यानन्यपदार्थानां घटादीनां सुबर्थे
ऽन्वयः तथा बहुगुडद्राक्षेत्यादौ गुडादीनामपि बह्वर्थे प्रकृत्यर्थ-
स्यैवपदसमाप्तौ नाम्नः प्राग्बहुचो विधानादिति।

ननु यदि नामार्थयोरपि भेदेनान्वयो व्युत्पन्नस्तर्हि ग्रामगत
इत्यादौ कर्म्मत्वादिसंसर्गेण ग्रामादेरेव गत्यादावन्वयोऽस्तु कृतं
ग्रामादिशब्दस्य ग्रामकर्म्मत्वादिलक्षणयेति चेत् सत्यं विग्रहवाक्यानां
समाससमानार्थकत्वरक्षणाय तत्र लक्षणास्वीकारात् मास्तु वा
ग्रामादिपदस्य तत्कर्म्मत्वादौ लक्षणा कर्म्मत्वादिसंसर्गेणैव ग्रामादे-
र्गत्यादावन्वयसम्भवात्तथापि न क्षतिः ग्रामं गत इत्यादिविग्रहस्यापि
कर्म्मत्वार्थकद्वितीयाद्युपस्थापकत्वादेव कर्म्मत्वादिसंसर्गेण गत्यादौ
ग्रामाद्यन्वयबोधकतया समाससमानार्थकत्वसम्भवात् ग्राममित्यादौ

कर्म्मत्वादिधर्म्मिकान्वयबोधानुरोधेन द्वितीयादेः कर्म्मत्वाद्यर्थकत्वात् अतएवाघटः पटइत्यादावन्यस्य असुरो दैत्यइत्यादौ विरोधिन अपितु घटइत्यादौ सदृशस्य अब्राह्मणोवायुर्विषइत्यादावपकृष्टस्य अनुदरमुदरमल्पइत्यादौ स्वल्पस्य वाचकेन नञ्‌निपातेन स्वार्थे प्रतियोगित्वादिसम्बन्धेनैव घटादेरनुभावनेऽपि तत्र तत्पुरुषे नाव्याप्तिः । पटस्याभावइत्यर्थे प्रसज्यनञा अव्ययीभावएवसमासः प्रमाणमनेनापटंवर्त्तते इत्याद्येव तत्र प्रयोगस्तत्पुरुषस्योत्तरपदलिङ्गकत्वनियमात् इति वृद्धाः । प्रसज्यनञाप्यपटइत्यादिस्तत्पुरुषस्य साधुर्नाव्ययीभावः नञ्तत्पुरुषविधेस्तदपवादकत्वात् अतएव वादिनामविवादइत्यादिकः किरणःवत्यादौ पुंसि प्रयोगइति तु पक्षधरमिश्राः । युज्यते चोत्तरः कल्पोनचेदेवं दृश्यैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः । चैत्रोग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना इत्यादौ राजसम्बन्धादेराजादिपदलक्ष्यत्वे तदेकदेशस्य राजादेस्तदा परामर्शो न स्यात् विशेष्यविधया स्वस्य पूर्व्वोपस्थापितस्यैवार्थस्य परामर्शकत्वात् तदादिशब्दानां नहि प्रजावतीयं मे त्वं तस्मै देहि कम्बलम् । नीतो मणिर्गुणः सोऽस्य भ्रात्रादिर्बोध्यते तदा ।

नन्वेवमनयैव रीत्या निषादस्थपतिं याजयेदितिश्रुतौ निषादानां स्थपतिरिति व्युत्पत्त्या न तत्पुरुषः परन्तु निषादः स्थपतिरित्यर्थे कर्म्मधारयएवेति सिद्धान्तोव्याहन्येत तत्पुरुषे भक्तिभिया हि तत्र कर्म्मधारयस्वीकारस्तन्मूलके निषादस्याधानेऽपूर्व्वविद्याप्रयुक्तिश्च कल्प्यते कल्प्यते च निषादीयतत्तदध्ययने निषेधविधिबाधात् स्त्रीशूद्रौ नाधीयेतामितिश्रुतौ तत्तदध्ययनेतराध्ययनपरत्वं चातेः शूद्रपदस्य त्रैवर्णिकान्योपलक्षकत्वात् । यदि च कर्म्मधारयइव तत्पुरुषेऽपि न लक्षणा तदा तत्पुरुषएव तयोचितस्त्रैवर्णिकस्यैव निषादीयस्थपतित्वेन प्राप्तावपूर्व्वविद्याप्रयुक्तौ तन्मूलकनिषेधविधिसङ्कोचस्य

प्रामाण्यप्रसङ्गादिति चेत् तत्पुरुषे लक्षणापत्तेऽपि निर्विवादं कर्म्मधारय एव तस्याभ्युपेयत्वे न तु तत्पुरुषः निषादानां स्थपतिरिति श्रुत्यत्र निषादस्थपतिपदान्निषादसम्बन्धित्वेन स्थपत्युपस्थापकस्य सर्व्वं सिद्धत्वेन तदनुरोधाल्लक्षणायाः। कृप्तत्वेन तत्कल्पनाभयस्यासम्भवात् नहि निषादस्थपत्यादिपदं निषादादिसम्बन्धितया स्थपत्यादि बोधने निराकाङ्क्षं तथा सति निराकाङ्क्षत्वादेव तत्पुरुषत्वासम्भवेन लक्षणापत्तेस्तद्बाधकतयोपन्यासानौचित्यात्। अथ बाधकं विना मुख्यार्थ एव श्रुतीनां प्रामाण्यं न तु प्रमाणान्तरविषयेऽपि लक्षणार्थे मुख्ये पञ्चदशसहस्रादिमीमांसया तथैव सम्प्रतिपत्तेरिति चेत्तर्हि बाधकासत्त्वे कर्म्मधारयविधयैव वेदानां प्रामाण्यं न तु प्रमाणान्तर विषयेऽपि तत्पुरुषविधया कर्म्मधारयात् समासान्तरस्य दौर्व्वल्य मित्यादिमीमांसया तथैव प्रतिपत्तेरित्यपि किन्न रोचयेः। तत्पुरुषाद्बहुव्रीहेर्जघन्यत्वमित्यत्राप्युक्तैव रीतिरनुसर्त्तव्या नहि बहुव्रीहौ समस्तपदानां लाक्षणिकत्वादेव ततो दुर्ब्बलत्वम् एकपदमात्र लक्षणयापि बहुव्रीहेर्निर्वाह्यत्वादित्याद्यन्यत्र विस्तरः।

अव्ययीभावं लक्षयति।

उत्तरार्थान्वितस्वार्थोऽव्ययपूर्व्वस्तु यो भवेत्।
समासः सोऽव्ययीभावः स्त्रीपुंलिङ्गविवर्ज्जितः।

यः समासः स्वोत्तरपदोपस्थाप्येन यदर्थेनान्वितस्य यदर्थस्य बोधकाव्ययपूर्व्वभागकः स तद्विशिष्टस्य तदर्थस्य बोधनेऽव्ययीभावः गृहे निर्म्मक्षिकम् उपकुम्भमित्यादौ हि मक्षिकाया अभावः कुम्भादेः सामीप्यादिर्मक्षिकादिपदप्राग्वर्त्तिना निराद्यव्ययेनानुभाव्यते अर्द्धशरीरमित्यादौ उत्तरपदार्थान्वितस्वार्थबोधकमव्ययं पदं नास्ति निर्म्मक्षिका भूमिः निर्म्मनुष्यो देश इत्यादौ तु मक्षिकादेरभावस्य बोधकत्वेऽपि निर्म्मक्षिकादिसमासस्य न व्याहताः स्त्रीपुंलिङ्गकार्थ्य विधुरत्वमिति तत्र न प्रसङ्गः।

निरूढया लक्षणया स्वांशव्यापकशब्दवान् ।

समास इति प्रकृतं तथाच स्वांशस्य निरूढलक्षणया व्यापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य सम्बन्धित्वप्रकारेणान्वयबोधं प्रति समर्थः समासः स्वगर्भतादृशार्थसम्बन्धिबोधने बहुव्रीहिरित्यर्थः । आरूढवानरो वृक्ष इत्यत्रारूढो वानरो यमिति व्युत्पत्त्या स्वकर्म्मकारोहणकर्तृवानरसम्बन्धित्वेन वृक्षं पीतपयस्कं पात्रमित्यत्र पीतं पयो येन इति रीत्या स्वकरणकपानकर्म्मजलसम्बन्धित्वेन पात्रं पक्वतण्डुलश्चैत्र इत्यत्र पक्वास्तण्डुला येनेति दिशा स्वकर्तृकपाककर्म्मतण्डुलसम्बन्धित्वेन चैत्रं दत्तदक्षिणो द्विज इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानकदानकर्म्मदक्षिणासम्बन्धित्वेन द्विजं पतितपत्रस्तरुरित्यत्र पतितं पत्रं यस्मादिति विग्रहेण स्वापादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुं चित्रगुरित्यत्र चित्रा गौर्यस्येति वाक्यानुसारेण चित्राभिन्नस्वगोसम्बन्धित्वेन चैत्रं रक्तपटः कपि इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्नस्ववृत्तिपटसम्बन्धित्वेन कायम् एवं बाणच्छिन्नकरो नर इत्यादावपि बाणेन छिन्नः करो येन यस्य वा इत्यादि विग्रहे बाणकरणकस्वकर्तृकच्छेदकर्म्मकरसम्बन्धित्वादिना नरादिकं बहुव्रीहिर्बोधयतीति सर्व्वत्र स्वगर्भतत्तदर्थसम्बन्धित्वेन धर्म्मिणामवगमः । दक्षिणपूर्व्वा पूर्व्वोत्तरेत्यादिविदिग्बहुव्रीहिस्थले दक्षिणया पूर्व्वा यस्या इत्यादिविग्रहेण स्वपार्श्वस्थदक्षिणसहितपूर्व्वसम्बन्धित्वादिना आग्नेयीप्रभृतीनां विदिशां बोधः । अस्तिक्षीरा नास्तिक्षीरा गौरित्यादावप्यस्ति क्षीरं यस्या इत्यादिविग्रहेणास्तित्ववत्क्षीरसम्बन्धित्वादिप्रकारेण गवादेरवगतिः । इयांस्तु विशेषो यदेकेषाम्मतेऽस्तीत्यादिकं तिङन्तमन्येषां तत्प्रतिरूपकाव्ययमिति । उप समीपे दश येषामिति समीपगवितत्वार्थकषष्ठ्या विग्रहादुपदशाः शकुनय इत्यादौ स्वसमीपगवितदशसम्बन्धित्वेन नवानामेका-

दशानाञ्च पञ्चानामवगमस्तत्र दशशब्दस्य दशत्वबाधकतया स्वपर्य्याप्त संख्यासमीपगणितदशत्वसम्बन्धित्वेनैव नवादेर्बोध इति दुर्गप्रभृतयः। अधिका दश येषामित्यादिविग्रहे अधिकदशाः पुरुषा इत्यादावपि स्वपर्य्याप्तसंख्याधिक दशवृत्तिसंख्यापर्य्याप्त्यधिकरण दशसम्बन्धित्वेन नवादिपुंसां प्रत्ययः। द्वौ त्रयो वा येषां इत्यन्यतरार्थकवाशब्देन विग्रहे द्वित्राः पञ्चषाः परमित्यादौ द्वित्र्यन्यतरपर्य्याप्तस्वपर्य्याप्त संख्यासम्बन्धित्वेन द्वयोस्त्रयाणां वा पञ्चानां बोधः पटे घटे वा घटत्वमित्याद्यनुरोधेन वाकारस्यान्यतरार्थकताया व्युत्पाद्यत्वात् तस्य च वृत्तौ गतार्थत्वादश्रुतिः पञ्च षड्वा येषामित्यादिविग्रहात् पञ्चषाः पुरुषा इत्यादावप्युक्तरीत्यैवान्वयो द्रष्टव्यः। परे तु द्वौ वा त्रयो वा येषामित्यादिविग्रहे वाशब्दस्य संशयकोट्यर्थकतया द्वित्रा इत्यादि बहुव्रीहेः स्वधर्म्मिकसंशयकोटितापन्नद्वित्रिसम्बन्धित्वेन द्विप्रभृति बोधकत्वमित्याहुः।

द्विस्त्रयो येषामिति विग्रहे तु द्विशब्दस्य द्विगुणितवृत्तित्वेन द्विगुणितत्रिपर्य्याप्तवृत्तिसंख्यासम्बन्धित्वेन द्वित्रा रसा इत्यादौ षण्णामवगमः सुजन्तर्भावेणैव विग्रहस्य व्युत्पन्नत्वाच्च पञ्चकृत्वो दश येषामित्यर्थे पञ्चदशा इत्यादिको न समासः सर्व्वत्रैव बहुव्रीहौ राजादित्वादति चरमस्वरादेर्लोपः। स्वधनसम्बन्धी चैत्र इत्यादौ स्वधनस्य सम्बन्धीति व्युत्पत्त्या स्वगर्भार्थस्य सम्बन्धित्वेन चैत्रं बोधयन्नपि तत्पुरुषो न स्वांशस्य निरूढलक्षणया प्रत्यायकपदेन घटितः। तथा आधुनिकलक्षणया स्वपटबोधकेन पटपदेन गर्भितः पटसम्बन्धीत्यादिरपि। मातृभक्त इत्यादिकस्तु तत्पुरुषः स्वमातृत्वेन निरूढलक्षणया बोधकेन विशेषितोऽपि न तत्सम्बन्धित्वेन बोधकः। नच द्वौ मुनी त्रयो वा मुनयो यस्येति वक्तृत्वार्थकषष्ठ्या विग्रहे स्ववक्तृमुनिद्वयादिसम्बन्धित्वेन बोधके द्विमुनि त्रिमुनि वा ग्रन्थ इत्यादौ

सह भेदार्थकसुबन्तपदस्यैव साकाङ्क्षं विग्रहः कथ्यते यथोक्तवाक्ये तथा सुबन्तस्यापि यदस्तत्र हस्तपदेनैव साकाङ्क्षत्वात् आरूढो वानरो य इत्यादौ तु यच्छब्दे। न भेदार्थकसुबन्त इति न तादृशस्यापि वाक्य-स्यार्थे बहुव्रीहिः पतितस्य धनं यस्य दण्डाद्घटो यस्मादित्यादिकन्तु समानार्थकसुब्द्वयीमन्तर्भाव्य न विग्रहः सम्प्रदायविरोधात् एवं घटेन पटो यस्येत्यादिकः सहार्थमन्तर्भाव्यापि सुबन्तैरिति तु सम्भ-वाभिप्रायं सघटो देशः इत्यादिबहुव्रीहेर्न घटो यस्येत्यादिविग्रहेण सहादेः सुबन्तत्वाभावेऽपि नाव्याप्तिः सपुत्र इत्यादौ तु सह पुत्रो-येनेत्यादिरेव विग्रहो न तु पुत्रेण सहेत्यादिरन्यपदार्थाप्राप्तेः सघटो देशः इत्यादौ च सह घटो येनेत्यादिर्विग्रहे सहार्थो वैशिष्ट्यं न तु सामानाधिकरण्यं घटे देशस्य तद्बाधात्। जीवत्पितृक इत्यादेस्तु जीवन् पिता यस्येति विग्रहो यस्य च पिता जीवन्नित्येवं जीवद्विधेयका-न्वये निराकाङ्क्षोऽपि जीवदभिन्नः पिता यदीय इत्यन्वय एव साकाङ्क्षः। इदन्तु बोध्यं यत्र विग्रहवाक्ये सुबन्तपदः क्रियासाकाङ्क्षत्वसम्भवस्तत्र तदर्थान्वितक्रियागर्भितत्वार्थे विना बाधकं बहुव्रीहिर्व्युत्पन्नः तेन गन्तव्यो ग्रामो यस्येति विग्रहे गन्तव्यग्रामकश्चैत्र इत्यादितः स्वकर्तृक-गतिकर्मग्रामसम्बन्धित्वेनैव चैत्रादेरौत्सर्गिको बोधः कदाचित्तु तात्-पर्य्यादिवशाद्गन्तव्याभिन्नस्वकीयग्रामसम्बन्धित्वेन यत्र तु न पदस्तत्-साकाङ्क्षत्वसम्भवस्तत्र विशेषविध्यसत्त्वे तद्ग्रामार्थमुख्यविशेष्यको विग्रह-वाक्याद्बोधः सुबन्तपदार्थान्वितग्रामार्थगर्भित एवार्थेऽतएव धनी दासो यस्येत्यर्थे यदीयधनवान् दासस्तस्य धनिदासकोऽयमित्यादितो नावगमः किन्तु धनवत्स्वदाससम्बन्धिन एव चन्द्रश्चूडायां यस्येत्यादि-कस्तु विग्रहेण यदीयचन्द्रचूडायामित्यर्थकः किन्तु यदीयचूडायां चन्द्र इत्यर्थकतादृशार्थं एव सप्तम्यन्तेनेन्द्वादेर्व्विशेषणे बहुव्रीहिवि-धानात्तेन चन्द्रचूडः शिव इत्यादौ स्वचूडावृत्तिचन्द्रसम्बन्धित्वेनैव

सिद्धत्वावगमो न तु चूडाकर्णिसम्बन्धीयचन्द्रसम्बन्धित्वेन तस्य प्रमाणादेर्वा बोधः स्वसम्बन्धिकपदार्थस्य विशेषणत्वपक्षे तु सुबन्तपदार्थान्वितेन तादृशपदस्यार्थेन अभिन्नेऽपि अत एव चैत्रः पुत्रवतोऽयं इत्यादौ स्वपुत्रवत्तोत्कर्षवानेव चैत्रादिः प्रतीयते न त्वन्यदीयपुत्रवत्तोत्कर्षाश्रयः ।

बहुव्रीहिं विभजते ।

तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिमः ।
विग्रहस्य विशेष्यो यस्तद्विशेष्यकबोधकृत् ।

तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो योऽर्थस्तद्विशेष्यकबोधको बहुव्रीहिः तयोरादिमस्तद्गुणसंविज्ञानस्तस्य स्वार्थगुणीभूतस्य सम्बन्धिविशेष्यविधया विज्ञानं यस्मादिति व्युत्पत्त्या साम्यसंज्ञाकत्वात् तद्विशेष्यात्तद्गुणसंविधानत्वमनत्यर्थाद्गम्यते घटस्वरूपः पदार्थः इत्यादितो हि घटः स्वरूपं यस्येति विग्रहस्थले स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्नस्वस्वरूपसम्बन्धित्वेन या विग्रहविशेष्यं तत्समेव विशेष्यविधया बोध्यते घटस्य स्वरूपं यस्मादिति विग्रहे च विग्रहस्य अविशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन कुटादिर्बा इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्मिक व्यवस्थाधर्म्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञानएव बहुव्रीहिः ।

प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्वक्ति ।

यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने ।
अनुकूलो बहुव्रीहिः स तयोरत्रादिमः ।

यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तयोस्तद्गुणातद्गुणसंविज्ञानयोरादिमः [illegible]

हारग्रीवं पश्येत्यादौ हि बहुव्रीहिर्लम्बकर्णसम्बन्धिनः स्वग्रीवाकर्षि हारसम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्म्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्यादन्वयबोधने समर्थ इत्येवंविध एव तद्गुणसंविज्ञानस्तद्भिन्नश्च चार्थादतद्गुणसंविज्ञानः यथा दृष्टसागरमानय इत्यादाविति प्राचाम्मतम् ।

व्युत्पत्तिवैचित्र्यार्थमन्यथापि पुनर्विभजते ।

स्वान्तर्निविष्टद्वित्र्यादिनामभिर्विग्रहात् पुनः ।
बहुव्रीहिर्बहुविधो द्विपदत्रिपदादिकः ।

द्वित्रिचतुरादिभिरेव स्वघटकनामभिर्विग्रहवशात् द्विपदत्रिपदचतुष्पदादिको बहुव्रीहिर्बोध्यः चित्रा गौर्यस्येति विग्रहाच्चित्रगुरित्यादौ द्विपदस्यैव जरती चित्रा गौर्यस्य महन्नीलमुत्पलं यत्रेत्यादिविग्रहाज्जरतीचित्रगुर्महन्नीलोत्पला सरिदित्यादौ त्रिपदस्यापि बहुव्रीहेरावश्यकत्वात् जरती चित्रगावो यस्य महन्नीलोत्पलं यत्रेति द्विपदविग्रहे जरतीशब्दे पुंवद्भावस्य महच्छब्दे चाकारस्य प्रसक्त्यादुत्तरपदे तयोर्विधानात् समासान्तपदस्य चोत्तरपदत्वात् एकमहदयमिति न्यायेन गवि चित्रजरतोरभेदानुभवस्योक्तरीत्या सम्पादयितुमशक्यत्वेन तदर्थमेव त्रिपदादिबहुव्रीहेरावश्यकत्वाच्च ।

द्वन्द्वं लक्षयति ।

यत्तदर्थकयोरन्यद्बोधयन्प्रकारके ।
बोधे समर्थः स द्वन्द्वः समासस्तावदर्थकः ।

यद्यदर्थोपस्थापकस्य क्रमिकयावन्नामस्तोमस्य नियमतस्तत्तदर्थप्रकारकान्वयबोधं प्रति तत्त्वेन समर्थस्तावन्नामनिवह एव तावदर्थको द्वन्द्वसमासः । पाणिपादं वादय धवखदिरौ छिन्धीत्यादौ हि कर्म्मत्वादौ करचरणादिप्रकारकान्वयबोधं प्रत्यमादिधर्म्मिकः करचरणाद्युपस्थापकस्य पाणिपादादिक्रमिकनामस्तोमस्याव्यवहितोत्तरत्व